अख्यात्यादिपक्षे च क्वचिदपि विषयमिथ्यात्वा नभ्युपगमात् , विषयमिथ्यात्वस्यच दूरतोनिरस्तत्वात् ; असत्ख्यातित्वस्यैवान्तत स्स त्वात् ; तदसत्त्वे तत्पक्षांगीकारस्यैवानुपपन्नत्वात् ; उपपन्नत्वांगीकारे चा नियमात् , न कथंचि दप्यसत्यात्सत्यप्रतिपत्तिरुदाहर्तुं शक्यते ।

यत्तु वस्तुतोसत्यस्यापि नसहसा पुनश्शास्त्रस्या सत्यता धियमधि रोहतीति । किं ततः ? निर्विशेषबोधकत्वव्यवसायोपपत्ति रितिचेन्न;- तदुपपत्तावपि तत्प्रमात्वासिद्धेः । आरोपितलिंगेन लिंगिबुद्धिवत् । ततश्च सत्यब्रह्मव्यवसायासिद्धिः । नच शास्त्रस्य असत्यता सहसैव धियन्नाधिरोहति, ब्रह्मव्यतिरिक्त समस्तमिथ्यात्वश्रवणवेळायामेव शास्त्र स्य तत्प्रामाण्यस्या प्येकप्रहारेण बाध्यमानत्वात् । अन्यथा सजातीय विजातीयादि समस्तभेदशून्य ब्रह्मप्रतीत्यनुदयप्रसंगात् ।

एतेन प्रमाणस्वरूप मिथ्यात्वेपि प्रामाण्यमस्तीति विप्र लंभव्यवहारोपि दत्तोत्तरः । नच बाधितानुवृत्त्या सादितिप्रतीत्य

---

रितिभावः (अख्यात्यादीति) आदिपदेन यथार्थख्यातिपरिग्रहः ( असत्ख्या तित्वस्येति ) रजतविषयत्वादेः सत्यत्वांगीकारेपि असद्विषयत्वं स दित्येव त्वयेष्टव्यं, अन्यथामिथ्यात्वपक्षांगीकारस्यैवा नुपपन्नत्वादित्यर्थः । रजताभावे रजतविषयत्व मनुपपन्नम्, विषयासत्वे असद्विषयत्व मु पपन्नत्वा दंगीक्रियत इत्यत्राह (उपपन्नेति) एवमपि विषयस्यासत्वे तद्विषयत्व मसदिति नियमो भग्नइत्यर्थः (एकप्रहारेणेति) प्रपंचेन सहैव शास्त्रस्यापि मिथ्यात्वेन ज्ञायमानत्वा दित्यथः ( अन्यथे शास्त्रतत्प्रामाण्ययोः मिथ्यात्व ज्ञानाभाव इत्यर्थः । नच स्व विरोधधीः, तथासति शास्त्रमसदेव निवर्तकज्ञाना त्प्राक्तधा न इति त्वदुक्ते रप्यसंभवात । अद्वैतप्रमाणस्या सत्यत्वेपि प्राम सत्यत्वा दारोपितलिंगेप्रामाण्यस्यापि मिथ्यात्वा दत्र तद्वैषम्या त्स सिद्धिसंभवइति केनाप्युक्तं निरस्यति (एतेनेति) प्रामाण्यस्या प्येकये